


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 10
January 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

जनवरि - २०२४ रू. २०/-

SIVAPRASAD

विना वेङ्कटेशं न नाथो न नाथः सदा वेङ्कटेशं स्मरामि स्मरामि।
हरे वेङ्कटेश प्रसीद प्रसीद प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ।।

**तिरुचानूरु ग्रामे, श्रीपद्मावतीदेव्याः 10-11-2023 तः 18-11-2023 पर्यन्तम् अयोजित कार्तिक ब्रह्मोत्सव दृश्यानि। अस्मिन् ति.ति.दे. पालकमण्डल्याः अध्यक्षः श्रीभूमन करुणाकर रेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., जीयर् स्वामिनः, अर्चकाः अन्ये प्रमुखाः, कलाबृन्दाः भक्ताः च भागं गृहीतवन्तः।**



















# गीतामृतम्



श्रीभगवान् उवाच हे अर्जुन!

श्रीभगवानुवाच -

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते।।

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे।।

(भगवद्गीता २-१९-२०)

भावः - आत्मा मारयति इति यः चिन्तयति सः, आत्मा हन्यते इति यश्च चिन्तयति सः च तौ उभावपि अज्ञानिनौ। आत्मा न मारयति, न म्रियते। आत्मनः उत्पत्तिर्नास्ति, मरणमपि नास्ति। आत्मा अजः नित्यः, शाश्वतः। शरीरे म्रियमाणे अपि आत्मा न म्रियते।

# सङ्कीर्तनम्



एवं श्रुतिमतमिदमेव
तद्भावैतुमतः परं नास्ति ।।एवं।।
अतुलजन्म भोगासक्तानां
हितवैभव सुखमिदमेव
सततं श्रीहरिसङ्कीर्तनं
तद्व्यतिरिक्तसुखं वक्तुं नास्ति ।।एवं।।
बहुलमरणपरिभवचित्तानां
इहपरसाधनमिदमेव
अहिशयनमनोहरसेवा
तद्विहरणं विना विधिरपि नास्ति ।।एवं।।
संसारदुरितजाड्यपराणां
हिंसाविरहितमिदमेव
कंसांतकवेङ्कटगिरिपतेः
प्रशंसैव पश्चादिह नास्ति ।।एवं।।

(अन्नमाचार्यसङ्कीर्तनम्)

# धनुर्मासोत्सवाः

वाचामगोचरं श्रुतिस्मृतिप्रमाणज्ञेयं स्वकटाक्षमोहितजनगणं कृपाजलधिं गोविन्दं संसारार्णवतरणाय अज्ञानध्वान्तनाशनाय चिरानन्दलयाय च सर्वथा, सर्वदा वयं भजेम। सर्वदा विहितमपि भगवदाराधनं धनुर्मासे शिशिरे विशिष्यते। यतोहि ''मासानां मार्गशीर्षोऽहं'' इति भगवद्वचनान्मासेषु भजनाय संसारेऽपि निवृत्तिमार्गानुगमनायोत्तमोऽयं मासः। इदमनुसृत्यैव भारते दक्षिणदेशे आल्वार्गणे वैष्णवेष्वन्यतमा विष्णुचित्ततनया गोदानाम्नी भागवतोक्तरीत्या गोपिका अनुसृत्य

हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः।
चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम्।।

इत्युक्तदिशा अस्मिन्मासे कृष्णं नारायणं पतिमिच्छन्ती सा व्रतं चकार। केवलमात्मनः कल्याणकामिनी न अपि तु स्वसखीनां हितैषिणी सा स्वसखीनां प्रबोधनपुरस्सरं गिरिधरं बभाज इति प्रमाणयति तस्याः तिरुप्पावैग्रन्थः। भक्तिभावभरितेषु पद्येषु रङ्गनाथमभ्यर्च्य तमेव लोकपतिं पतिं प्राप। अस्याः तिरुप्पावैप्रबन्धस्य प्रामाण्यं प्राधान्यञ्च प्रकटयन् श्रीवेङ्कटाद्रिनिलयः अस्मिन् मासे सुप्रभातसेवामपि परित्यज्य तिरुप्पावैश्रवणेन प्रतिदिनं प्रबुद्धो भवति। धनुर्मासेऽस्मिन् विलक्षणतया एकान्तसेवा श्रीकृष्णस्य भवति वेङ्कटाद्रौ।

मनुष्यसंवत्सरः देवानामेकमहोरात्रं भवति। अयं मासोऽमरणां ब्रह्ममुहूर्तकाल इत्युच्यते। अत एवास्मिन् प्रातरुत्थानं प्रातस्स्मरणादिकं विहितम्। मोक्षदायिनी एकादशी या वैकुण्ठैकादशीति जनपदे ख्याता सापि मार्गशीर्ष शुक्लपक्षे वर्तते। अस्मिन्नवसरे सर्वेष्वपि वैष्णवमन्दिरेषु वैकुण्ठद्वारं वैकुण्ठः प्रविशति। एकादशीव्रतेनानेन मोक्षप्राप्तिर्भवति। जनाः श्रद्धालवः व्रतं रात्रिजागरणेनाचरन्ति।

कलियुगप्रत्यक्षदेवस्य नित्यमुत्सव एव। तत्रापि सकोलाहलोऽयमुत्सवः जनानन्दकरः। मोक्षहेतू। भक्तिवैराग्ये इत्यतः तत्प्रदातुः द्रविडवेदस्य अनुसन्धानं शेषाचले पुनरन्येष्वपि दिव्यदेशेषु भवति। अयं चोत्सवः नवभक्तिभरितानां पद्यानामध्ययनात् अध्ययनोत्सव इत्युच्यते।

मार्गशीर्षमासान्ते इतिहासानुसारमर्चावतारेऽपि माधुर्यरसपूरितभावमग्नायाः गोदायाः मालां धरति श्रीवेङ्कटेशः। ''पार्वेट'' इति प्रदेशख्यातः मृगयोत्सवोऽपि भवति। यस्मिन् श्रीकृष्णेन सह शिखरेशः मलयप्पस्वामी अघान्घातयन्निव दुष्टान् भीषयन्निव पञ्चायुधधारी

''वनमाली गदी शार्ङ्गी'' शङ्खी चक्री च नन्दकी'' इति मृगयां याति।

स्वामिपुष्करिणीतटस्थस्य प्रणयकलहोत्सवः विख्यातः। नित्यदम्पत्योः कलहोऽपि स्याद्वेति प्रश्ने कर्तुमकर्तुमन्यथाकर्तुं समर्थः लोकव्यवहारं नटति। एतादृशान् सरसान् श्रीनिवासस्य उत्सवान् पश्यन्तः स्मरन्तश्च वयं जीवनं धन्यं कुर्मः।

 

# जनवरि २०२४

सम्पुटिः-१० सञ्चिका-१०

श्रीशोभकृत्संवत्सरस्य मार्गशिरकृष्णपञ्चमी तः
श्रीशोभकृत्संवत्सरस्य पुष्यकृष्णपञ्चमी पर्यन्तम्-१९४४



**मुखचित्रम्** – श्रीदेवी भूदेवी समेत श्रीमलयप्पस्वामी, तिरुमल।

**अन्तिमरक्षापुटः** – गोदादेव्याः अलङ्कारे श्रीमलयप्पस्वामी।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.),
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः:
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.

# तेलुगुजनानां बृहत् उत्सवः



तेलुगु मूलम्, - श्री भूमन करुणाकररेड्डि, अध्यक्षः,
ति.ति.दे. पालकमण्डली

बृहद्द्वारम् इत्यस्य अर्थः शिखरस्य प्रधानद्वारम्। तेलुगुजनानां कृते बृहत् उत्सवः नाम सङ्क्रान्तिः। सङ्क्रान्तिः क्रीडनक पर्व, रङ्गवल्लीपर्व, सस्यापर्व, पशुपर्व, ज्येष्ठानां पर्व इति अपि प्रसिद्धा अस्ति। सङ्क्रान्तेः पुण्यसमये सूर्यः मकरराशिं प्रविशति। अतः अस्मिन् उत्तरायणे पवित्रे ऋतौ दिव्यमार्गस्य आरम्भे स्नानं, दानं, जपः, तर्पणं च कर्तव्यानि। अस्मिन् समये प्रत्येकस्मिन् गृहे स्वाभाविकतया दुग्धसस्यानि प्रचुराणि भवन्ति। सस्य फलं दृष्ट्वा कृषकः तावत्पर्यन्तं परिश्रमं विस्मरति, अस्मिन् मासे कृषकैः भूमिः हरिता क्रियते, क्षेत्रं कर्षन्तः भगवतः कृतज्ञतायाः चिह्नरूपेण अमुम् उत्सवं कुर्वन्ति। अस्मिन् पुण्यकाले पशुसम्पदः विशेषरूपेण पूजयन्ति।

पूर्वं अस्माकं ग्रामाः नवधान्यैः, क्षीरान्नेन, रङ्गवल्लिभिः च पूर्णैः कोष्ठैः सुन्दररूपेण दृश्यन्ते। गृहस्य बालिकानां सङ्क्रान्त्यां गृहम् आगन्तुं परम्परा अस्ति। स्त्रियः वदने हरिद्रां धारयन्ति, रक्तवर्णसदृशं तिलकं धारयन्ति, हिमयवनिकाशाटिकां धरन्ती पौष्यलक्ष्मीः इव च विराजन्ते।

सर्वाः बालिकाः गृहस्य पुरतः प्राङ्गणं रङ्गवल्लिभिः अलङ्कुर्वन्ति। रङ्गवल्लीमध्ये गोमयगोळाकारप्रतिमां स्थापयन्ति। ताः कूष्माण्ड, जाती पुष्पैः अलङ्कुर्वन्ति। अत्र वृत्ताकारेण बालिकाः परिभ्रमन्त्यः गीतानि गायन्ति। एतत् पृथ्वी-पूजनमेव भवति। बालकाः पतङ्गान् उड्डाययन्ति।

प्रातः काले एव भोगिवह्निनां कोलाहलः प्रचलति। पुरातनं त्यक्त्वा नूतनस्य आह्वानं कुर्वन् भोगिवह्निमध्ये पुरातनवस्तूनि स्थापयित्वा आनन्दमनुभवन्ति जनाः। मानवानां मनसि स्थितमालिन्यनिष्कासनसन्देशः अत्र दृश्यते।



सायंकाले पञ्चवर्षाभ्यन्तरस्थानां बालकानां, बालिकानां कृते भोगि फलानि तेषां मस्तके अर्पयिष्यन्ति। एषु जम्बू फलानि, चणक धान्यानि, रूप्यकानि च भवन्ति। बालकानां शिरस्योपरि स्थित ब्रह्मरन्धात् अधः पातयिष्यन्ति। तस्मात् बालानां बुद्धिबलं, संस्कारः द्विगुणीभवति। बालारिष्टदोषाः अपि गच्छन्ति।

सङ्क्रान्तिपर्वणि 'कनुमा' पर्वदिनमपि अन्तर्भागः एव। कनुमा नाम पशूनां पर्वदिनः। पशून् हरिद्राकुङ्कुमैः अलंकृत्य पूजयन्ति। मुद्रान्नं कृषिक्षेत्रे स्थापयन्ति। एतद् कार्यं पृथिव्याः आराधनमेव। अस्माकं भारतदेशः कृष्याधारित देशः। अस्मिन् समये नूतन धान्यानि क्षेत्रात् आगच्छन्ति। नूतन तण्डुलैः देवानां क्षीरान्ननिवेदनं कुर्वन्ति। अस्मिन् समये नूतन तण्डुलाः, नूतन गुडः, नूतन तिलाः आगच्छन्ति। सङ्क्रान्तिवेलायां कूष्माण्ड दानं, अपूपदानम् अवश्यं करणीयम्। अतः पितृदेवाः सन्तुष्टा भवन्ति।

भिक्षुकाः आमासं हरिनामसङ्कीर्तनैः सङ्क्रान्ति दिनेषु ग्राम ग्रामेषु सञ्चारं कुर्वन्ति। 'अम्ब पलुकु! जगदम्ब पलुकु!' इति ढक्का नादं कृत्वा, शुभम् इति वदन्तः भिक्षुकाः सर्वत्र कोलाहलं कुर्वन्ति। वृषभरक्षकाः विविधैः आभरणैः अलंकृत्य वृषभान् नीत्वा ग्रामान् प्रति आगच्छन्ति। ''डूडू बसवन्ना'' इति वदन्तः रङ्गवल्ल्याम् वृषभान् क्रीडयिष्यन्ति। जङ्गम देवः ''शम्भो महादेव शिव शङ्करा'' इति उच्चैः वदन्तः घण्टानादं कृत्वा विचित्र वेषधारणैः आगच्छन्ति। विदूषकाः हास्य क्रियाकलापं कुर्वन्ति। ते ग्रामवासिनां कृते आनन्दं दास्यन्ति। अस्मिन् सङ्क्रान्ति समये मासाबत्तिनि जनाः, नूनेगुड्डलजनाः, श्मशानरक्षकः जनाः इति नाम्ना प्रसिद्धाः याचकाः दृश्यन्ते।

कोम्मदासर्लुनाम्ना भिक्षुकाः ग्रामे एकस्य वृक्षस्य उपरि उपविश्य बहुकोलाहलं कुर्वन्ति। विविध भिक्षुकाः देवानाम् अभिनयं कृत्वा मासपर्यन्तं चरन्ति। वस्तुविक्रयार्थं विविध ग्रामेभ्यः वणिजः आगच्छन्ति। मणिवणिजः मणीन् विक्रीणन्ति। वनवासिनः वेणुमयान् उष्णीषान् विक्रीणत्ति।

इदानीं कालः यान्त्रिकः जातः। चलद्वाण्यः, सङ्गणकयन्त्राणि समाजे प्रभावं प्रदर्शयन्ति। तेषां मायायां चलन्तः जनाः एतादृश विशेष उत्सवान् त्यजन्तः सन्ति। पुनः अस्माकं ग्रामेषु पूर्ववैभवम् आगाछेत्। पूर्वसदाचाराः, उत्सवाः पुनः आगाछेयुः। एते उत्सवाः केवलं स्मृतयः इव न भवन्तु इति इच्छामि।

संस्कृतानुवादः
- श्रीमती जि.विद्यावती,
चरवाणी - ८६८६१३१८३३





# मकरसङ्क्रान्तिः

पुष्यमासे शुक्लपक्षे तृतीयायां भोगिनाम्ना, चतुर्थ्यां मकरसङ्क्रान्तिनाम्ना, पञ्चम्यां 'कनुमु' नाम्ना उत्सवाः प्रचलन्ति। आंग्लमानानुसारेण जनवरि मासे १४,१५,१६ दिनाङ्केषु क्रमेण भोगि, मकरसङ्क्रान्ति, कनुमु'' नामभिः उत्सवाः आचर्यन्ते। यदा सूर्यः मकरराशिं प्रविशति तदारभ्य उत्तरायण पुण्यकालः आरब्धो भवति। तत्पूर्वदिवसं भोगिदिवसम्। तत् दक्षिणायनस्य धनुर्मासस्य च अन्तिमं दिवसम्। मकरसङ्क्रान्तेः अनन्तरं दिवसं कनुमु इत्यच्यते। त्रिष्वपि एतेषु दिवसेषु तत्तद्देशाचारानुसारेण उत्सवाः दैवकार्याणि, च आचर्यन्ते।

मकरसङ्क्रमणपुण्यकाले अजीवत्पितृकाः श्रद्धया पितृतर्पणादिकं कुर्वन्ति। भोगिदिवसे सूर्योदयात्पूर्वमेव स्नात्वा भोगिवह्निं प्रज्वालयन्ति। ज्येष्ठाः बालैः भोगिवह्निज्वालासु गोमयकरीषमालाः आर्पयन्ति। कनुमुदिवसे पशुपूजा आचर्यते। विशिष्य आन्ध्रदेशे तत्तत्प्रदेशेषु प्रभोत्सवः महता कोलाहलेन आचर्यते।

दिनत्रयं सर्वसमादरास्पदं
त्रयस्य मध्ये दिवसे विवस्वतः।
गतिर्हि राशौ मकरस्य पावनी
समर्चनीयाः पितरोऽद्य देवताः।।
पुरोपि पश्चाद्दिवसस्य तस्य तु
दिनद्वयी राजति सर्वतोषिणी।
तयोर्द्वयोर्भोगिसमाख्यमादिमं
दिनं द्वितीयं कनुमेति गीयते।।
गृहे गृहे शालिविशेषमञ्जरी
वितानगुच्छैर्वलभी विराजते।
कृषीवलानां सुखपूर्णजीवनं
दयार्द्रभावं विहगेषु शंसति।।
अकृष्टपच्या इव सस्यसम्पद
रससारकैदार्यसमञ्चिता भुवः।
महाकुसूला बहुधान्यपूरिताः
वदन्ति सौख्यावहजीवनं भृशम्।।
रसालपत्राञ्चिततोरणा गृहाः
तदा सुधालेपनभित्तिराजिताः।
वदन्ति संक्रान्ति महोत्सवागमम्।।
नवीनवस्त्राभरणैर्विभूषिताः
गृहीतताम्बूलसुरञ्जिताघशः।
सुगन्धसंवासित वस्त्रविग्रहाः
वदन्ति संक्रान्ति महोत्सवागमम्।।
कृषीवलास्सस्यसमृद्धिलाभात्
कृतज्ञभावेन पशून् प्रसाध्य।
धान्यैः कुसूलान् परिपूर्य तृप्त्या
वर्षश्रमं सार्थकमामनन्ति।।
तथैव तृप्त्या परिवारयुक्ताः
नूत्नानि वस्त्राणि च धारयित्वा।
संयोज्य भद्रान् शकटेषु पुष्टान्
विनोदभूमीः प्रति यान्ति धन्याः।।

- श्री कोम्पेल्ल कामेश्वरवधानुलु
चरवाणी - ९४४१३७१७२१



# गीतायां मोक्षसन्न्यासयोगस्य प्रामुख्यम्

(तदनन्तरम्)

**११. विश्वरूपसन्दर्शनयोगः -** भगवता विश्वरूपप्रदर्शनात् योगस्यास्य नाम सार्थकं भवति। जगत्सर्वं ब्रह्ममयम् एकमेवाद्वितीयम्। निश्चलभक्त्या हृदयात् माया यदा नश्यति तदैव दिव्यदृष्टिः भगवद्दर्शनञ्च स्यादित्यपि विवृतम्।

श्रीकृष्णस्य देहे एव अर्जुनब्रह्मादिदेवताः ऋष्यादित्ययक्षगन्धर्वराक्षसमानवपश्वादितिर्यग्जातयः लोकाः सर्वेऽपि वर्तन्ते इति सर्वं वासुदेवमयमिति मायया एकस्मिन् अनेकत्वं कल्पितमिति ''एकं सद्विप्राः बहुधा वदन्तीति'' श्रुतिवाक्यमप्यत्र स्मरणीयम् मानवाः निमित्तमात्राः। सर्वेश्वरशक्त्या एव सर्वं सम्भवतीति भगवान् अर्जुनं प्रति निमित्तमात्रं भव सव्यसाचिन्निति प्रोक्तवान्। तथापि पुरुषप्रयत्नः ईश्वराज्ञया कर्तव्य एव। जीवाः पुरुषप्रयत्नेन विना कृतार्थाः न स्युः। अस्मिन् सन्दर्भे मत्कर्मकृत् मत्परमो.... यस्समामेति पाण्डव इत्युक्तम्।

**१२. भक्तियोगः -** भक्तिमधिकृत्य अधिकतया प्रोक्तत्वात् भक्तियोगः इति नाम प्रयुक्तम्। सगुणभक्तिः निर्गुणभक्तिश्च श्रद्धान्विता सती निरन्तरभगवच्चिन्तनया आचर्यमाणा चेत् श्रेष्ठा एवेति भगवतात्र उपदिष्टः। देहादिष्वभिमानानि मोक्षप्राप्तेः प्रतिबन्धकानि। यद्यपि ज्ञान योग एव श्रेष्ठः शक्तिहीनानां निष्कामकर्मयोगः श्रेयस्करः आचरणीयाः भगवद्भक्तानामवश्यकाः सर्वे सद्गुणाः अत्र प्रदर्शिताः। गीतापारायणमपि भक्तियोगात् आरभ्य कृतं चेत् निर्विघ्नपरिसमाप्तिर्भवेदिति केषाञ्चिदाशयः।

गीतासर्वमपि भागचतुष्टये वर्तते। कर्मयोगः, भक्तियोगः, ध्यानयोगः, ज्ञानयोगः इति अध्यायेषु पश्यामः। अन्ये सर्वेष्वध्यायाः अत्रैवान्तर्भवन्ति।

गीता तत्त्वमसीति महावाक्यमेव उपदिशति। प्रथमषडध्यायेषु तत्पदार्थ ईश्वरः द्वितीय षडध्यायेषु त्वं पदार्थः जीवः तृतीय षडध्यायेषु असि पदार्थमैक्यं निरूप्यते इति जीवेश्वरैक्यमेव गीतासारः इति महतामभिप्रायः संस्कारमनुसृत्य जीवानां मनः प्रवर्तते। भक्तैः भक्तियोगः निष्कामकर्मपरैः कर्मयोगः ध्यानयोगिभिः आत्मसंयमयोगः ज्ञान योगिभिः ज्ञानयोगः पठितव्यः। अन्याध्यायाः गौणरूपेण पठनीयाः। भक्तियोगस्य दैवगुणाः सर्वैरपि प्राप्तव्याः। 'येतु धर्म्यामृतमिदं..... भक्तास्तेऽतीव मे प्रियाः'' इत्यत्र श्लोकः।




## डा. के.सूर्यनारायण रेड्डी

चरवाणी - ८१०६५७८२५०


**१३. क्षेत्रक्षेत्रज्ञविभागयोगः -** क्षेत्रं नाम शरीरम्। क्षेत्रज्ञः जीवः। उभावप्यत्र निरूपिताविति क्षेत्रक्षेत्रज्ञविभाग योगः इति नाम कृतम्। आत्मानात्मस्वरूपं सर्वैः ज्ञातव्यम्। भक्तिमतां आत्मस्वरूपज्ञानमावश्यकम्। आत्मनि नित्यत्वबुद्धिः अनात्मनि अनित्यत्वबुद्धिः भवितव्या। भक्ताः एवं ज्ञात्वैव मुक्तिं प्राप्नुवन्ति। प्रकृतिपुरुषक्षेत्रक्षेत्रज्ञानापेक्षया ज्ञानज्ञेयस्वरूपं अवश्यं ज्ञातव्यम्। ज्ञानिनः सगुणः एव ज्ञानम्। दैवसाक्षात्कार एव ज्ञेयः इति ग्राह्यम्। ज्ञानिनः विंशतिगुणाः अत्र प्रोक्ताः। केवलप्रकृतिगुणवान् अज्ञानी एव। अविद्यारूपप्रकृतिगुणाः परिहरणीयाः। ज्ञानिनि अमानित्वादिविंशतिगुणसत्त्वेऽपि ज्ञेयब्रह्मसाक्षात्कारप्राप्तावेव अमृतत्वं सिध्यति। विक्षेपादिविषयवासनानि वृत्त्यर्थं सिद्धब्रह्मोपदेशोऽपि यन्तवता, भाव्यम् समस्सर्वेषु भूतेषु यः पश्यति स पश्यति इति श्लोकार्थः अत्र अवधेयः।

**१४. गुणत्रयविभागयोगः -** गुणत्रयेण जीवः कथं बद्धः भवतीति कथनात् गुणत्रयविभागयोग इति नामकृतम् गीतायामधिकप्रामुख्यविशिष्टोऽयमध्यायः ज्ञानयोगान्तर्गतः। एकाग्रताचित्तशुद्धिमद्भिरेव अयमध्यायः अवबुध्यते। ईश्वरस्तरूपस्य जीवात्मनः मालिन्यं कथं जातम्। प्रकृतावयं कथं बद्धः, कथं विमुक्तो भवति। प्रकृति दोषनाशाय साधनं किं, के के कैः कैः गुणैर्युक्ताः भवन्ति। जीवन्मुक्तस्य लक्षणं किमित्यादि सर्वे विषयाः अत्र विशदीकृताः। दैतचिन्तापरैः भवदोषः भगवद्भक्त्या शुद्धीकरणीयः यः कोऽपि निर्मलभक्त्या एव प्रकृतिदोषपरिहरणेनैव भगवत्प्राप्तिं लभेत्। ''गुणानेतानतीत्य...... अमृतमश्नुते''। इति भगवता उपदिष्टः।

**१५. पुरुषोत्तमप्राप्तियोगः -** पुरुषोत्तमस्य परमेश्वरस्य प्राप्तिपद्धतिरत्र बोध्यते इति पुरुषोत्तमप्राप्तियोगः इति नाम कृतम्। अध्यायोक्तप्रकाराचरणात् भगवदैक्यरूपमोक्षः सिध्यति। भोजनकाले अवश्यमस्याध्यायस्य पठनात् महापुण्यप्राप्तिर्भवेदिति अध्यायफलश्रुतौ प्रोक्तम्। १४ श्लोके भगवतैव ''अहं वैश्वानरो भूत्वा..... पचाम्यन्नं चतुर्विधमिति'' प्रोक्तम्। भोजनकाले पञ्चप्राणेभ्यः पञ्चज्ञानेन्द्रियकर्मेन्द्रियेभ्यः पञ्चतन्मात्राभ्यः आत्मा विलक्षणस्वरूपः इति भावनीयः। जीवसंज्ञया प्रकाशमानः भगवानेव। अतः भक्तैः आत्मानुसन्धानपरैः भाव्यमिति उपदिश्यते। आदावत्र प्रपञ्चवृक्षवर्णनं कृतम्। संसारवृक्षच्छेद्नादेवमुक्तिः। संसारवृक्षः अज्ञानवृक्ष एव। कीदृशेन परशुना अयं वृक्षः छेद्यः इति मुमुक्षुभिरवश्यं ज्ञातव्यः। अस्य वृक्षस्य मूलमुपरिभागे अग्रः अधो भागे वर्तते। आश्चर्यजनकं रहस्यमिदं उत्तमगुरुभ्यः ज्ञातव्यम्। ''अव्यक्तमूलप्रभवः भगवान् इति स्मृतावपि प्रोक्तम्। अव्याकृतमायया उद्भूतः क्रमशः विस्तृतः बुद्धिवृक्षः। नेत्रेन्द्रियादिरथाः एव वृक्षरथाः पृथिव्यादिपञ्चभूताः एव महाशाखाः शब्दादिविषयाः एव पत्राणि धर्माधर्ममेव पुष्पाणि। सुखदुःख पापपुण्यान्येव फलानि, वृक्षः पक्षिणामिव समस्तप्राणिनां जीवनाधारः ब्रह्मज्ञानप्राप्त्यनन्तरमेव ब्रह्माधिष्ठानभूते संसारवृक्षः एव परमात्मनः विहारस्थनवनं भवति। अविद्या अव्यक्तम् प्रकृतिर्मायेति अस्यैव संसारवृक्षस्य नाम। ''यतन्तो योगिनश्चैनं..... नैनं पश्यन्त्यचेतसः'' इत्यत्र श्लोकः।

**१६. दैवासुरसंपद्विभागयोगः -** दैवसंपत्तिः असुरसंपत्तिश्चात्र विस्तृतया प्रोक्ता इति दैवासुरसंपद्विभागयोगः इति नाम कृतम्। मुमुक्षुभिः क्रमशः असुरगुणाः परित्याग्याः, सर्वे दैवगुणाः सम्पाद्याः अभयं सत्वसंशुद्धिः, ज्ञानयोग व्यवस्थितिः, दानदमयज्ञाः, स्वाध्यायः तपः, आर्जवं, अहिंसासत्यमक्रोधः, त्यागश्शान्तिरपैशुनं, दया, भूतेष्वलोलत्वं, मार्दवह्रीः अचापलं, तेजः क्षमा, धृतिश्शौचमद्रोहः। नातिमानिता अभिमानराहित्यम् इत्येते २६ दैवगुणाः। दम्भदर्पाभिमानक्रोधपारुष्याज्ञानानि इति ६ असुरगुणाः। असुरगुणः तामसस्वभावः। दैवगुणः सात्त्विकस्वभावः। अतः सत्कर्मसदाचारैः आत्मविचारं सदा कृत्वा भगवदैक्यं प्राप्तव्यम्।

**१७. श्रद्धात्रयविभागयोगः -** सत्त्वरजस्तमोगुणाः मानवेषु विद्यमानाः ते कथमात्मानं प्रेरयन्तीत्यादिविषयविवरणात् श्रद्धात्रयविभागयोगः इति अध्यायस्य नाम कृतम्। अत्र सङ्केतान् ज्ञात्वा यस्य कस्यापि स्वभावं ज्ञातुं शक्यम्। जन्मान्तर-संस्कारात् अत्र करणप्रवृत्तिर्भवति जीवः तथैव प्रवर्तते।

एवं स्थितौ प्रवृत्तिमार्गात् निवृत्तिमार्गे कथं प्रवेशः इति प्रश्ने जाते वेदशास्त्रज्ञानात् सदाचारगुरुभ्यः कर्तव्याकर्तव्यज्ञानं प्राप्य क्रमशः मोक्षः सम्पादनीयः। मुमुक्षुभिः राजसतामसश्रद्धाः परित्यज्य सत्त्वगुणप्रवेशं कृत्वा ततः श्रद्धात्रयातीतशुद्धज्ञानस्वरूपे तृतीयश्रद्धा किलक्षणा। इयं शिवानन्दामृतस्वरूपा। सात्त्विकश्रद्धामार्गानन्तरमेव अत्र प्रवेष्टुं शक्यते। रजस्तमोगुणमार्गाः पापिनां पतनमार्गाः एव। सत्त्वगुणमार्गः एव मोक्षप्राप्तिगृहमार्गः सर्वैरवलम्बनीयः। सात्त्विकराजसतामसलक्षणानि, तेषां आहाराः तपोयज्ञदानानि च त्रिविधानि श्रद्धात्रयविभागयोगे सम्यक् विशदीकृतानि। ओं तत्सदिति यज्ञदानक्रियासु प्रवर्तमानस्य ओंकारस्य प्रामुख्यं ज्ञात्वा सर्वास्ववस्थासु सम्यगाचरणीयम्।

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत्।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह।।

एवं विषादयोगादारभ्य श्रद्धात्रयविभागपर्याप्तं सप्तदशाध्यायेषु प्रोक्तानां विषयाणां सारं संगृह्य अनुक्तविषयानपि पूरयित्वा मोक्षसन्न्यासयोगे कथनात् चरमः मोक्षसन्न्यासयोगः अतीवप्रामुख्यं भासते। कर्तव्ययुद्धविमुखः अर्जुनः ''अष्टादशाध्यायगीतां श्रुत्वा'' नष्टो मोहः स्मृति र्लब्धा करिष्ये वचनं तवेति कर्तव्यपरायणः निष्कामकर्मयोगी सन् युद्धसुमुखः विजयमवाप युद्धे। एवमर्जुनेन मोक्षस्यापि त्यागात् मोक्षसन्न्यासयोगस्य गीतायामत्यधिकं प्रामुख्यं वर्तते इति महतामाशयः।



श्री श्रीनिवासा गोविन्दा ।
श्री वेङ्कटेशा गोविन्दा ।

## जनवरि - २०२४

भक्तवत्सला गोविन्दा ।
भागवतप्रिय गोविन्दा ॥

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |

नित्यनिर्मला गोविन्दा ।
नीलमेघश्याम गोविन्दा ।

## फिब्रवरि - २०२४

पुराणपुरुषा गोविन्दा ।
पुण्डरीकाक्ष गोविन्दा ॥

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | | |

गोविन्दा हरि गोविन्दा।
गोकुलनन्दन गोविन्दा।

## मार्च् - २०२४

नन्दनन्दना गोविन्दा ।
नवनीतचोर गोविन्दा ।

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |
| 31 | | | | | | |



## जनवरि - २०२४

१. आङ्गलसंवत्सरारम्भः
०७-१३. आण्डाल् नीराट्टोत्सवः
१४. भोगि, भोगि तेरु
१५. मकरसङ्क्रान्तिः
१६. कनुम, श्रीगोदादेवीपरिणयोत्सवः
१८. तिरुमल श्रीस्वामिनः प्रणयकलहमहोत्सवः
२५. रामकृष्णतीर्थमुक्कोटि
२६. गणतन्त्रदिनोत्सवः

## फिब्रवरि - २०२४

०९. श्री पुरन्दरदासः आराधनोत्सवाः
१०-१८. देवुनिकडपा श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१४. वसन्तपञ्चमी
१६. रथसप्तमी, भीष्माष्टमी
१७-२३. तिरुपतिस्थ गोविन्दराजस्वामिनः प्लवोत्सवः
२०. भीष्मैकादशी
२४. श्रीकुमारधारा तीर्थमुक्कोटि
२४- मार्च् ०८. श्रीनिवासमङ्गापुरम् श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः

## मार्च् - २०२४

०१-१०. पर्यन्तम् तिरुपति कपिलेश्वरस्वामिनः ब्रह्मोत्सवाः
०८. महाशिवरात्रिः
१७-२५. पर्यन्तम् - तरिगोण्ड श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः
२०-२४. तिरुमलक्षेत्रे प्लवोत्सवः
२३-२७. वेदनारायणस्वामिनः प्लवोत्सवः
२५. तुम्बुरतीर्थमुक्कोटि,
श्री लक्ष्मीजयन्ती



## एप्रेल् - २०२४

पशुपालक श्री गोविन्दा
पापविमोचन गोविन्दा

दुष्टसंहार गोविन्दा
दुरितनिवारण गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | | | | |

## मे - २०२४

शिष्टपरिपालक गोविन्दा
कष्टनिवारण गोविन्दा

वज्रमकुटधर गोविन्दा
वराहमूर्ति गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

## जून् - २०२४

गोपिजनलोल गोविन्दा
गोवर्धनोद्धार गोविन्दा

दशरथनन्दन गोविन्दा
दशमुखमर्दन गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | 31 | | | | | |

### एप्रेल् - २०२४

०५-१३. तिरुपतिस्थ, श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः
०६. अन्नमाचार्यवर्धन्तिः
०९ क्रोधीनाम संवत्सरारम्भः (युगादिः)
११. मत्स्यजयन्ती
१२-२०. वायलपाडु
श्रीपट्टाभिरामस्वामिनः ब्रह्मोत्सवः
१७-२५. ओण्टिमिट्ट
श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः
१४. तमिळनूतनसरावत्सरम्भः
१७. श्रीरामनवमी
२१-२३. तिरुमल, श्रीस्वामिनः वसन्तोत्सवः
२३ तः मे ०१.पर्यन्तम् १२.नागुलापुरम्,
श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः

### मे - २०२४

०१. मे डे
१०. अक्षयतृतीया, श्रीपरशुरामजयन्ती
०७-१४. तिरुपति गङ्गाजातर
१२. श्रीरामानुजजयन्ती, श्रीशङ्करजयन्ती
१६-२४ तिरुपति श्रीगोविन्दराजस्वामिनः
ब्रह्मोत्सवः
१७-१९. तिरुमल श्रीपद्मावतीश्रीनिवासपरिणयमहोत्सवः
२०-२३. तिरुचानूरु श्रीपद्मावतीदेव्याः वसन्तोत्सवः
२१-२९. हृषीकेष्/नारायणवनम्
श्रीकल्यणावेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२२. श्रीनरसिंहजयन्ती, तरिगोण्ड वेङ्कमाम्बाजयन्ती
२३. श्रीकूर्मजयन्ती, श्रीअन्नमाचार्यजयन्ती
२९ तः जून् ०६ पर्यन्तम्. कार्वेटिनगरम्
श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः

### जून् - २०२४

०१. श्रीहनुमज्जयन्ती
१४. तिरुपति, श्रीगेविन्दराजस्वामिनः पुष्पयागः
१७-२५. अप्पलायगुण्ट, श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः
ब्रह्मोत्सवः
१७-२१. तिरुचानूरु श्रीपद्मावतीदेव्याः प्लवोत्सवः
१९-२१. तिरुमल श्रीस्वामिनः ज्येष्ठाभिषेकः
२७-२९. तिरुचानूरु श्रीसुन्दरराजस्वामिनः
अवतारोत्सवः

# तिरुमलतिरुपतिदेवस्थानानि



## जूलै - २०२४

पक्षिवाहन गोविन्दा
पाण्डवप्रिय गोविन्दा

मत्स्य कूर्म गोविन्दा
मधुसूदन हरि गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |

## आगस्ट् - २०२४

वराह नरसिंह गोविन्दा
वामन भृगुराम गोविन्दा

बलरामानुज गोविन्दा
वेणुगानप्रिय गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | 31 |

## सेप्टेम्बर् - २०२४

सीतानायक गोविन्दा
श्रितपरिपालक गोविन्दा

अनाथरक्षक गोविन्दा
आपद्बान्धव गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | | | | | |

### जूलै - २०२४

१०-१२. श्रीनिवासमङ्गापुरम् श्री कल्याणवेङ्कटेश्वरस्वामिनः साक्षात्कारवैभवम्
१६. तिरुमलक्षेत्रे स्वामिनः आणिवर आस्थानम्
१६-१८. तिरुपति श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकः
१७. तोलि एकादशि
१७-२०. तिरुपति, श्री कपिलेश्वरस्वामिनः प्लवोत्सवः
२१. गुरुपूर्णिमा, व्यासजयन्ती

### आगस्ट् - २०२४

०४. श्रीचक्रत्ताळ्वार् वर्षतिरुनक्षत्रम्
०८. नागचतुर्थी
०९. गरुडपञ्चमी
१३. मातृश्री तरिगोण्ड वेङ्गमाम्बावर्धन्तिः
१४-१७. तिरुमल श्रीस्वामिनः पवित्रोत्सवः
१५. स्वातन्त्र्यदिवसः
१६. वरलक्ष्मीव्रतम्,
१९. श्रीहयग्रीवजयन्ती, श्रीविखनसमहामुनिजयन्ती
२०. गायित्रीजपः
२६. श्रीकृष्णजन्माष्टमी
२७. गोकुलाष्टमी

### सेप्टेम्बर् - २०२४

०५. श्रीबलरामजयन्ती, श्रीवराहजयन्ती
०७. विनायकचतुर्थी
०८. ऋषिपञ्चमी
१८-२६.तिरुमल श्रीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१५-१८. तिरुचानूरु, श्रीपद्मावतीमातुः पवित्रोत्सवः
१७. अनन्तपद्मनाभव्रतम्

# तिरुमलतिरुपतिदेवस्थानानि



शरणागतवत्सल गोविन्दा
करुणासागर गोविन्दा

## अक्टोबर् - २०२४

कामितफलदा गोविन्दा ।
पापविनाशक गोविन्दा ॥

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | 31 | | |

धरणीनायक गोविन्दा।
दिनकरतेजा गोविन्दा॥

## नवम्बर् - २०२४

पद्मावतिप्रिय गोविन्दा
प्रसन्नमूर्ती गोविन्दा

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |

सालग्रामधार गोविन्दा।
सहस्रनामा गोविन्दा॥

## डिसेम्बर् - २०२४

गरुडवाहन गोविन्दा।
गजराजरक्षक गोविन्दा॥

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |

### अक्टोबर् - २०२४

०२. गान्धीजयन्ति
४-१२. तिरुमलक्षेत्रे स्वामिनः ब्रह्मोत्सवाः
४-१२. तिरुचानूरु श्रीपद्मावतीदेव्याः नवरात्र्युत्सवः
०८. तिरुमल श्रीस्वामिनः गरुडसेवा
०९. सरस्वतीपूजा
११. दुर्गाष्टमी
१२. महानवमी, विजयदशमी
३१. नरकचतुर्दशि, दीपावली अमावास्या

### नवम्बर् - २०२४

०१. श्रीकेदारगौरीव्रतम्
०५. नागचतुर्थी
०९. तिरुमलक्षेत्रे स्वामिनः पुष्पयागः
१३. कैशिकद्वादशी
१४. बालकदिनोत्सवः
२८- डिसेम्बर् ०६. तिरुचानूरु श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः
२८. धन्वन्तरी जयन्ति

### डिसेम्बर् - २०२४

०२. तिरुचानूरु श्रीपद्मावतीदेव्याः गजवाहनोत्सवः
०६. तिरुचानूरु श्रीपद्मावतीदेव्याः पञ्चमीतीर्थम्
०७. तिरुचानूरु श्रीपद्मावतीदेव्याः पुष्पयागः,
११. गीताजयन्ति
१२. श्रीचक्रतीर्थमुक्कोटि
१३. तिरुपति श्रीकपिलेश्वरस्वामिनः
कृत्तिकादीपोत्सवः
१७. धनुर्मासारम्भः

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

### गोदास्तुतिः -

श्लो. ९. नित्याप्तकाम इति वेदशिरस्स्तुतोऽपि
यन्मौलिवासितसुमस्त्रजिबद्धकामः।
तल्लब्धये स्पृहयते भुजगाद्रिनेता
सा विष्णुचित्ततनया भवतात् गतिर्मे।।

ता - भगवान् वासुदेवोऽधिगतसर्वकाम इति उपनिषद्भिः सङ्कीर्त्यते। तथापि स देवदेवः आमुक्तमाल्यदा इति प्रसिद्धया गोदादेव्या स्वस्याः शिरसि अलङ्कृतायां पुष्पामालायाम् अत्यन्तासक्तो बभूव। वटपत्रशायिनः तादृशं भावबन्धं प्राप्ता विष्णुचित्ततनया मे भगवत्प्राप्तौ उपायभूता भवतु।

सु.सौ.व्याख्या - श्री भूनीलादेवीनां प्रार्थनानन्तरं भगवतोऽत्यन्तप्रीतिपात्रीभूता विष्णुचित्तात्मजा गोदादेवी अस्मिन् श्लोके समाश्रीयते।

नित्याप्तकामः - भगवान् अवाप्तसमस्तकामः। अत्र काम शब्देन भोग्यवस्तूनि, भोगोपकरणवस्तूनि भोगस्थानानि च बोध्यन्ते। तथा च इच्छायां सत्यां स्वाभिमतविनियोगस्य अनुगुणपरिकर सम्पत्तिमान् परमात्मा इति भावः। किञ्च तस्य सर्वदा अवाप्ता एव सर्वे कामा इति च ज्ञाप्यते। अनवाप्तं अवाप्तव्यं च किमपि तस्य नास्तीत्यर्थः।

वेदशिरस्स्तुतः - वेदशिरांसि वेदान्ता उपनिषदः। तत्र सत्यकाम इत्यादिना परमपुरुषः प्रास्तूयत इत्यर्थः। छान्दोग्ये अष्टमाध्याये दहरविद्यायाम् - एष आत्माऽपहतपाप्मा विजरो विमृत्युः विशोको विजिधत्सोऽपिपास स्सत्यकाम



स्सत्यसङ्कल्पः॥८.१.५ इति परमात्मनः सत्यकाम स्वरूपं प्रतिपादितम्॥ अपि एतेन तस्य प्रीत्यतिशयो व्यज्यते।

यन्मौलि... बद्धकामः - यस्या गोदादेव्या मौलिः केशबन्धः। तादृशि सुमस्रजि बद्धः कामः यस्य स इति विग्रहः। गोदादेव्याः केशपाशस्य सौरभेण प्राप्तपरिमलायां सुममालायाम् अत्यन्तासक्तः श्रीनिवास इति भावः॥

तल्लब्धये.... भुजगाद्रिनेता - तन्मालिकाप्राप्तौ अतिस्पृहयालुः भगवान् प्रत्यहं तादृशीमेव मालां स्वस्मै समर्पयितुं विष्णुचित्तम् आदिष्टवान्। एतद् ऐतिह्यम् अनुसृत्यैव अद्यापि प्रतिवत्सरं तिरुमलक्षेत्रे ब्रह्मोत्सवेषु चतुर्थपर्वणि श्रीविल्लिपुत्तूरुक्षेत्रात् गोदासान्निध्यात् सुममाला सोत्सवं सभक्तिकं च वेङ्कटाचलाधीशस्य सन्निधौ समर्प्यते।

विष्णुचित्ततनया - द्रविडदेश भूषणानां आळ्वार् इति प्रसिद्धानां द्वादशसङ्ख्याकानां दिव्यसूरीणाम् अग्रगण्यः पेरियाळ्वार् इति विख्यातो भट्टनाथापरनामा परमभक्ताग्रेसरो विष्णुचित्तमहाभागः। श्रीविल्लिपुत्तूरु दिव्यक्षेत्राभिजनोऽयं भक्तकविः पल्लाण्डु, पेरियाळ्वार् तिरुमोळि इति भक्तिरसपरिपूर्णं दिव्यप्रबन्धयुगलं जगौ।

भक्तवरोऽयं प्रतिदिनं तुलसीपुष्पदामादीन् तस्मिन् क्षेत्रे विलसते वटपत्रशायिने समर्पयति स्म। तैश्च भगवान् अतीव तृप्यति स्म। काले गच्छति एकदा विष्णुचित्तार्यस्य पुष्पनिर्भरे नन्दनाख्ये स्वारामे शिशुरेका लब्धा। तां च उद्धृत्य झटिति स्वगृहम् आनीय पत्न्यै दत्वा तामतीव वात्सल्येन पुत्रप्रेम्णा पोषयामास। क्रमेण च सा यौवनं वयः प्राप्तवती। एकस्मिन् दिने पितरि मालाः ग्रथयित्वा ताः देवसमर्पणाय संसिद्ध्यति सति, तदन्तरे गोदा मालाम् एकां निजशिरसि अलङ्कृत्य सौन्दर्यं निर्वर्ण्य पुनः मालाभाजने तां स्थापितवती। भट्टनाथार्यस्तु यथापूर्वं ता मालाः देवाय समार्पयत्। ततश्च सद्यः एव तत्र तन्मालायां सक्तम् एकं शिरोजं दृष्टवान्। निजसुतया इयं माला धृतपूर्वा इति च ज्ञातवान्। तेन च स्वस्य भगवदपचारेण अत्यन्तं विषण्णचित्तोऽभूत् विष्णुचित्तार्यः। गृहम् आगत्य गोदाम् अधर्षयत् च। अनन्तरदिवसे यथापूर्वं मालाः देवाय समर्पितवान् स भक्तवरः। तासु पूर्वदिने इव गोदाकेशसौरभाभावात् स भगवान् विष्णुचित्तार्यं प्रति एवम् उवाच हे प्रियभक्त! इतः प्रभृति प्रतिदिनम् अपि गोदया धृतपूर्वा एव मालाः मदर्थम् आनय। ताः एव मे प्रीतिम् आवहन्ति-इत्युक्तवान्। तथेत्युक्त्वा च भट्टनाथार्यः ततः प्रभृति तदादिष्टविधया गोदादेवीधृता एव मालाः तत्प्रीतये भगवते समर्पितवान्। एवं गोदादेवी आमुक्तमाल्यदा सञ्जाता। एवं च तस्याः तमिळभाषायाम् आण्डाळ् शूडिकोडुत्त नाच्चियार् इत्यपि सभक्तिको व्यवहारः। अनन्तरकाले सा देवदेवम् एव पतिं वृत्वा तम् अभिजगाम - इति इतिहासः। परम पावनीम् इमां देवीम् अधिकृत्य साम्प्रदायिकाः इत्थम् मङ्गलम् आशंसन्ति -

**स्वोच्छिष्टमालिकाबन्ध गन्धबन्धुर जिष्णवे।**
**विष्णुचित्त तनूजायै गोदायै नित्यमङ्गलम्॥** इति।

भक्तिपरिपूर्णया तथा देव्या तिरुप्पावै, नाच्चियार् तिरुमोळि इति दिव्यप्रबन्धद्वयं सुगीतं साहित्यतारापथे चन्द्रायते।

श्लोकेऽस्मिन् पूर्ववत् वसन्ततिलकवृत्तम्॥

(अनुवर्तिष्यते)



## नवम्बर् २०२३
## लघुप्रश्नोत्तरी समाधानानि

१. सूर्यवंशः
२. जयविजयौ
३. यजुर्वेदस्य
४. अगस्त्यमहामुनिः
५. दूर्वासमहामुनिः
६. शन्तनः
७. अष्टादश
८. गङ्गादेवी
९. अधिरथ राधौ
१०. देवव्रतः
११. भीमः
१२. भयङ्करः
१३. अम्बा
१४. गर्दभस्य
१५. परशुरामः

(तदनन्तरम्)

भारतीयाः प्रकृतेः आराधनमानसाः। ते जलस्य प्राधान्यं सम्यक् जानन्ति। जलं साक्षात् भगवतः स्वरूपमिति मत्वा आराधनं कुर्वन्ति। तस्यैव पुण्यतीर्थमिति व्यवहारः। पुण्यतीर्थेषु स्नानं सर्व दुःख निवारणमिति ज्येष्ठाः वदन्ति। तेषु कपिल तीर्थं श्रेष्ठम्। सूत महर्षिः एवमुवाच "हे मुनयः! वराह पर्वतस्य महत्वं वक्तुं न पारयामः। अतः आत्माराम वृत्तान्तं वदामि। मध्य राष्ट्रवासी ब्राह्मणः आत्मारामः। सः महान् पण्डितः भक्तश्च। धर्मज्ञः, सत्कर्मपरायणः अपि। पित्रार्जितेन धनेन सर्वं जीवनं व्यतीतम्। धनस्य समाप्तेः अनन्तरं सः दरिद्रः अभवत्।

देवपूजां ब्राह्मणसमाराधनं पूर्ववत् कर्तुमसमर्थः। इत्यतः ग्रामं त्यक्त्वा वेङ्कटाचलं गतः। तत्र विद्यमान कपिल तीर्थे स्नानं कृत्वा भगवतः कपिलेश्वरस्य पूजनं कृतवान्। अनन्तरं वेङ्कटाचलवनेषु विद्यमानसर्व तीर्थेषु स्नानमाचरितवान्। एकत्र गुहायां ध्यानमग्नं महात्मानं दृष्टवान्। सः महात्मा अन्यः कोपि न, साक्षात् सनत्कुमारः एव।

तं तपोनिरतं दृष्ट्वा आश्चर्यचकितः अभवत्। आत्मारामः महामुनेः साष्टाङ्ग प्रणामं चकार। तं कारुण्यमूर्तिं प्रणम्य "हे महात्मन्! हे तपोधन! मामुद्धरतु, अहं दरिद्रः अभवम्, गृहं त्यक्त्वा आगतवान्। अत्र भवादृशानां पुण्यपुरुषाणां दर्शनं प्राप्य धन्योस्मि। अन्यथा शरणं नास्ति त्वमेव शरणं मम, तस्मात् कारुण्यभावेन मामुद्धर" इति प्रार्थितवान्। आत्मारामस्य प्रार्थनां श्रुत्वा सनत्कुमारः एवमवदत् "विप्रवर्य! पूर्वजन्मनि त्वं लोभी आसीः। त्वं अशुद्धः,




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

माधवभक्तिविहीनः च। त्वं दातृग्राहकयोः मध्ये कलहं सृजसि स्म। परन्तु अस्मिन् जन्मनि कपिलतीर्थ स्नानम् आचरितवानसि अतः तव पापराशिः दग्धः। परन्तु ऐश्वर्यसिदध्यर्थं विष्णुवक्षस्थलस्थितायाः, पद्मालयायाः व्यूहलक्ष्म्याः अनुग्रहः आवश्यकः। सा लोकमाता दयालुः दीनवत्सला अस्ति सा त्वाम् उद्धरति, संदेहं मा कुरु। एवमुक्त्वा सनत्कुमारः आत्मारामस्य व्यूहलक्ष्मीमन्त्रोपदेशं चकार। सनत्कुमारः शिष्यं वेङ्कटाचलं गच्छतु, वेङ्कटेश्वरः तव कामितार्थं प्रदास्यति इति आदिष्टवान्। आत्मारामः गुरुं प्रणम्य वेङ्कटाचलं प्राप्तवान्। तत्र गुरुणा दत्तस्य व्यूहलक्ष्मीमन्त्रस्य अनुष्ठानं कुर्वन् कालं व्यतीतवान्। आत्मारामस्य तपसा संतुष्टः नारायणः श्रीभूनीळासमेतः प्रकटितः। आत्मारामः देवं प्रणम्य स्तुतिं चकार। श्रीहरिः एवमुवाच "आत्माराम चिन्ता मास्तु। तव विषये व्यूहलक्ष्मीः अतीव प्रसन्ना। अयुरारोग्यैश्वर्याभिवृद्धिरस्तु। अतिशीघ्रं अभ्युन्नतिं अवाप्नोतु।" अनन्तरं स्वग्रामं गत्वा दानादि सत्कर्मानुष्ठानं कुर्वन् जीवनं करोतु।"

एतत्सर्वं श्रुत्वा सर्वेऽपि मुनयः वैकुण्ठपुरे विद्यमाननाम् अन्य पर्वतानां विषये, तीर्थानां वैशिष्ट्यं पृष्टवन्तः। तदा सूतः एवं विवृणोति। "कपिलः कर्दमप्रजापतेः पुत्रः योगाभ्यास निष्टागरिष्ठः धर्मपरायणः च। सः पाताळलिङ्गस्य उपासकः। एकदा लिङ्गं भूतले पतितम्। देवाः सर्वेऽपि तस्य पूजां चक्रुः। मानवाः सर्वेऽपि श्रद्धया लिङ्गपूजनं कृतवन्तः। तत् कपिलमहामुनिदर्शितं, भोगवतीतटे स्थितं कपिल लिङ्गम्। अन्यत् 'चक्रतीर्थम्'। अत्रैव इन्द्रः पापविमुक्तः। विष्वक्सेन तीर्थं पुण्यवर्धकं अस्ति, वरुणपुत्रः विष्वक्सेनः अत्रैव तपः आचरितवान्। तपसा विष्णोः सर्व सैन्याध्यक्षत्वे विष्णुना नियुक्तः। अतः अस्य "विष्वक्सेन तीर्थम्' इति व्यवहारः। तस्योपरि पञ्चायुधानि तीर्थानि अपि सन्ति। तेषामुपरि ब्रह्म तीर्थं स्थितम्। तत् पश्चात् सप्तर्षि तीर्थानि अपि सन्ति। एतेषां माहात्म्यं श्रुत्वा एकः विप्रः तेषु स्नानम् आचरितवान्। श्रीहरिः स्वप्न साक्षात्कारं दत्वा "विप्र! कुतः अतीव श्रमम् ऊढ्वा अत्र आगतवान्? अत्रैव स्वामि पुष्करिणी इति तीर्थं स्थितम्। श्रीस्वामिपुष्करिणी स्नानम् कृत्वा सर्व तीर्थ स्नान पुण्यं अवाप्स्यसि इत्यवोचत्।" विप्रः विष्णोः उपदेशं पालितवान्। श्री पुष्करिणी स्नानं कृत्वा सिद्धिं प्राप्तवान्। श्रीवेङ्कटाचले त्रिकोटि तीर्थानि सन्ति।

(अनुवर्तिष्यते)



# पितृभक्तः नचिकेताः

वाजश्रवाः नाम दानपरः ब्राह्मणः आसीत्। एकदा सः विश्वजित्-यज्ञम् अकरोत्। समाप्ते यज्ञे सः ब्राह्मणेभ्यः दक्षिणाम् अयच्छत्। दक्षिणायां सर्वदा प्रियं वस्तु यच्छेत् इति नियमः। किन्तु पिता वाजश्रवाः तु दक्षिणारूपेण दुग्धदाने असमर्थाः दुर्बलाः वृद्धाः च धेनूः अयच्छत्। तस्य पुत्रः नचिकेताः तद् अपश्यत्। असमीचीनदानेन पिता मे नरकं गमिष्यति इति भीत्या सः पितरम् अपृच्छत्। ''पितः, किं तव अतीव प्रियम्?'' झटिति पिता अवदत्, ''वत्स, त्वमेव मम प्रियतमः।'' नचिकेताः पुनः अपृच्छत्, ''तर्हि मां कस्मै दास्यति भवान्?'' वाजश्रवसा किमपि उत्तरं न दत्तम्। द्विवारं त्रिवारं नचिकेतसा तदेव पृष्टम्। तदा क्रुद्धः भूत्वा पिता नचिकेतसम् ''अहं त्वां मृत्यवे ददामि'' इति अवदत्।

पिता क्रोधावेशे एवम् उक्तवान् इति नचिकेताः अजानात्। तथापि पितुः आदेशपालनार्थं सः यमपुरम् अगच्छत्। यमपुरे यमः अनुपस्थितः। बालः नचिकेताः तत्रैव त्रीणि दिनानि यावत् किमपि अभुक्त्वा अपीत्वा यमस्य प्रतीक्षाम् अकरोत्।

चतुर्थे दिवसे यमः यमपुरं प्राप्तः। क्षुधार्तं पिपासार्तं बालातिथिं दृष्ट्वा तस्य हृदयं करुणया अद्रवत्। यमः नचिकेतसे ''त्रीन् वरान् याचस्व' इति अवदत्। ततः बालकः प्रथमं वरम् अयाचत, ''मम जनकस्य वाजश्रवसः मां प्रति क्रोधः शान्तः भवतु।'' ''स्वर्गसाधिकाम् अग्निविद्यां दत्त्वा माम् अनुगृह्णातु'' इति द्वितीयं वरं सः अयाचत। यमः आनन्देन वरौ प्रायच्छत्। ततः तृतीयवररूपेण नचिकेताः आत्मज्ञानम् अयाचत। तस्य प्रार्थनां श्रुत्वा यमः चकितः। न कोऽपि मर्त्यः अद्यपर्यन्तं तद् ज्ञातुकामः। अल्पवयसः बालकस्य कथमिव प्रगल्भा ज्ञानतृष्णा? यमः विविधप्रलोभनैः नचिकेतसं तृतीयवरात् निवारयितुं प्रायतत। किन्तु निश्चलः नचिकेतसः निर्णयः। अन्ते वरं दातुं वचनश्रद्धः यमः तस्मै ज्ञानिनामपि दुर्लभम् आत्मज्ञानम् उपादिशत्।



# गोमय देवता नमस्तुभ्यम्

तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसी प्रसाद
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

मार्गशिरमासे.... प्रातःकाले मुग्धाः उत्थाय, अलङ्कारान् कृत्वा प्रतिवेशिनः गृहं गत्वा....




सर्वाः कन्याः मिलित्वा लक्ष्मीदेवीं, गौरीमातरं उद्दिश्य गीतानि गायन्त्यः गोशालाः प्रति गच्छन्ति। गाः नमस्कुर्वन्ति। वेणु डोलिकासु गोमयं पूरयित्वा गृहप्राङ्गण समीपमागतवत्यः। घटैः जलमानीतवत्यः।









सर्वत्र कन्याः.... गोपिकाः...! सकल देवता पूजनं करणीयम्। धूप... दीं..... नैवेद्य .... नीराजन.... समर्पणं करणीयम्।




गोमय गोळान् हस्तेन स्पृष्ट्वा तेषां परितः अटन्त्यः गीतानि गायन्तु। अस्माकं सम्पत्, सौभाग्यं लभ्यन्ते। सस्यानि वर्धन्ते। आरोग्यं लभ्यते।







सायं सन्ध्या समये गोमय गोळान् भित्तौ स्थापयामः।






भोगि पर्वदिने आमास पर्यन्त शुष्क गोमय गोळान् चुल्ली मध्ये स्थापयित्वा मुद्गान्नं कृत्वा सूर्यस्य निवेदयामः।



स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

## बालविनोदिनी







## रसप्रश्नाः

१. पीताम्बरः इति कस्य नाम?

२. महाभारते ''कृष्णा'' इति का कथ्यते।

३. रामायणे भरतस्य पत्नी का?

४. सुग्रीवस्य पुत्रः कः?

५. कुशलवयोः पितामहः कः?

६. कुशलवयोः मातामहः कः?

(समाधानानि १. श्री महा विष्णोः, २.द्रौपदीम्, ३.माण्डवी, ४.अङ्गदः, ५. दशरथः, ६.जनकः)








(१. बालिका नास्ति २.पुष्पं नास्ति ३.पक्षी नास्ति ४.पतङ्गः नास्ति ५. घटः नास्ति ६. वृक्षः नास्ति ७. गोमय गोलं नास्ति)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



१८

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. कृष्णाष्टमी कस्मिन् मासे भवति?
२. कृष्णचारित्र्यमञ्जरी कस्य ग्रन्थः?
३. कृष्णचारित्र्यमञ्जरी कस्य भागवतभागस्य सङ्ग्रहग्रन्थः?
४. तिरुक्करम्बनूर् कुत्र वर्तते?
५. तिरुमले विद्यमान सुप्रसिद्ध पुष्करिण्याः नाम किम्?
६. विवाहार्थं किं पश्यन्ति।
७. संस्काराः कति?
८.रामायणे ''कौसल्या सुप्रजा राम'' इति श्लोकं कः अवदत्?
९. रसाः कति?
१०. ''योनिमन्ये'' इत्यादिश्रुतिः कुत्र वर्तते?
११. कुचेलस्य निज नाम किम्?
१२. अज्ञातवास समये भीमस्य नाम किम्?
१३. अज्ञातवास समये द्रौपद्याः नाम किम्?
१४. विष्णुसहस्रनाम स्तोत्रं कस्मिन् पर्वणि भवति?
१५. रावणस्य कनिष्ठः भ्राता कः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०१.२०२४ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



तिरुमलक्षेत्रे 19-11-2023 दिनाङ्के
आयोजितः श्री स्वामिनः पुष्पयागमहोत्सवः।



तिरुचानूरु क्षेत्रे 19-11-2023 दिनाङ्के
आयोजितः श्री पद्मावत्याः पुष्पयागमहोत्सवः।



कैशिकद्वादशी पर्वदिन सन्दर्भे 24-11-2023 दिनाङ्के तिरुमल माडवीथीषु श्रीदेवी, भूदेवी समेत श्री उग्र श्रीनिवासमूर्तेः प्रचलित शोभायात्रा दृश्यम्। अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डल्याः अध्यक्षः श्री भूमन करुणाकररेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.इ.एस्., पालकमण्डली सदस्याः आलयाधिकारिणः, जीयर् स्वामिनः भक्ताः च भागं गृहीतवन्तः।



तिरुमल श्रीस्वामिनः आलये 26-11-2023 दिनाङ्के अत्यन्त वैभवेन कार्तिक दीपोत्सवः प्रचलितः। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., तिरुमल श्री श्री श्री पेद्द जियरे स्वामी, आर्चकाः अपि च आलयाधिकारिणः भागं गृहीतवन्तः।








26-11-2023 दिनाङ्के श्रीस्वामिनः दर्शनार्थम् आगतानां भारतदेश प्रधानमन्त्रिवर्याणां गौ॥ श्री नरेन्द्रमोदी महोदयानाम् आन्ध्रप्रदेश् राज्य गवर्नर् महोदयाः श्री एस्.अब्दुल् नजीर्, आन्ध्रप्रदेश् राज्य मुख्यमन्त्रिवर्याः श्री वै.एस्. जगन्मोहन् रेड्डि महोदयाः आह्वानं कृतवन्तः।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-12-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal Regd. No. TRP/154/2024-2026" LICENCED TO POST
WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

# गोदादेव्याः
## अलङ्कारे मलयप्पस्वामी